मत्तनुभूता मच्छरीरभूता पञ्चभूततितिस्तु पञ्चभूतनिवहस्तु अवश्यं पोष्या। नो चेत्, तथा न पोषयसि चेत्, त्वं न भूतपतिः भविता। वृथा हि ते तन्नाम स्यात्॥ ४१ ॥

अतिकोमलं मनस्ते मुनिभिर्गीतं कुतोऽधुना कठिनम्।
मन्ये [२५]विषाशनार्थं [२६]कठिनं चेतस्त्वया विहितम्॥ ४२॥

**अतिकोमलमिति** । ते मनः मुनीभिरतिकोमलं गीतम्। तत्कुतोऽधुना कठिनम्? कठिनीभूतमिति मद्विषये स्फुटम्। कदैवं कठिनीभूतं स्यात्? मन्ये विषाशनार्थं कालकूटप्राशनाय चेतस्त्वया कठिनं विहितम्। न हि सुकुमारमनाः कोऽपि विषाशने प्रवर्तेत॥ ४२॥

मां द्रष्टुमष्टमूर्ते करुणा तेऽद्यापि किं न वोल्लसति।
भिक्षाप्रसङ्गतो वा[२७] कियतां नो यासि सदनानि॥ ४३॥

**मामिति** । हे अष्टमूर्ते शिव। पञ्चभूतानि सूर्याचन्द्रमसौ यजमानश्चेति एतानि शिवस्य अष्टमूर्तयः। मां द्रष्टुं दर्शनेन अनुग्रहीतुमद्यापि ते करुणा किं वा नोल्लसति। किं तथाविधो दुर्लभः प्रभुरसि, न बहिः कुतोऽपि चरसि, न कमपि पश्यसि? नैव तथासि। त्वं भिक्षाटनरूपः खलु; भिक्षाप्रसङ्गतो कियतां सदनानि वा न यासि। प्रतिसदनं प्रवेशो हि भिक्षुशीलम्। तथा सति ममैकस्यैव कथं ते दर्शनं न भवति?॥ ४३॥

वित्ताधिपः सखा ते भार्या देहे तवान्नपूर्णाख्या।
[२८]ऊरीकृतं न दूरीकुरुषे भिक्षाटनमपीश[२९]॥ ४४॥

नित्यभिक्षुरसि त्वमिति निन्दास्तुतिमाह—**वित्ताधिप इति** । वित्ताधिपः धनदः ते सखा। अन्नपूर्णाख्या तव भार्या देहे शरीर एव वर्तते। तथा वित्तान्नसंपन्नोऽपि स्वयमीशोऽपि ऊरीकृतमङ्गीकृतं भिक्षाटनमपि अप्रशस्तमपि तत्, हे ईश प्रभो, न दूरीकुरुषे न त्यजसि। अङ्गीकृतमिति तादृशं भिक्षाचरणमपि अजिहासत् त्वं किं मादृशमङ्गीकृतं भक्तं त्यक्ष्यसि इति भावः॥४४॥

---

२५. विषनाशनार्थं—R. २६. कठिणं—R, M.
२७. प्रसङ्गतोद्वा कियंति नो—R. २८. उररी°—R. २९. भिक्षाटण°—R, P.

**नाङ्गीकृतो मया त्वं तत एव न दर्शनं मम तवास्ति।**
**इति नोत्तरं प्रदेयं शिव शिव विश्वेशनामासि ॥ ४५ ॥**

अस्तु नाम तथा, त्वां पुनः कदाहमङ्गीकृतवानिति पृच्छसि किम्? ब्रवीम्युत्तरमित्याह—**नाङ्गीकृत इति**। त्वं मया नाङ्गीकृतः। तत एव हेतोः मम दर्शनं तव नास्ति। इति उत्तरं न प्रदेयम् त्वया। यतः हे शिव शिव! त्वं विश्वेशनामा असि। विश्वमात्रं यदा त्वदीयं, तदा अहमेव त्वया नोरीकृत इति न संभवति ॥ ४५ ॥

**यदि देहगेहरूपं ददासि देशाधिकारकार्यं मे।**
**रसनाख्यलेखपत्रे[30] सुदृढां कुरु नाममुद्रां ते ॥ ४६ ॥**

**यदीति**। मे देहगेहरूपं शरीर-गृह-रूपं देशाधिकारकार्यं तत्प्रदेशेषु तत्स्वामितया तत्कार्यनिर्वाहपर्यवेक्षणादिरूपमधिकारकार्यं यदि ददासि, तदधिकारप्रामाण्याय मम रसनाख्यलेखपत्रे ते नाममुद्रां सुदृढां कुरु। केषुचिद् ग्रामेषु देशमुखादि-अधिकारं कस्मैचिद् प्रयच्छन् राजा स्वनाम-मुद्राङ्कणपूर्वं तस्मै अधिकारलेख्यपत्रं ददाति, तत्पत्रप्रामाण्यबलाच्च स देशा-धिकारी स्वकार्यं निर्वहति। एवं च मम देहगेहप्रदेशाधिकारं प्रयच्छता त्वया मदीयरसनारूपलेख्यपत्रे मदधिकारनिर्वाहसौकर्याय त्वन्नाममुद्रा अवश्यं देया। त्वन्नामबलादेव निर्वहामि न त्वन्यथा प्रभविष्यामीति भावः ॥ ४६ ॥

**रसनोक्तं कुरु सर्वं शिव तव नामाधिमुद्रितास्तीयम्।**
**गणयसि मुद्रां न हि चेत् प्रभुतोच्छिन्ना[31] तवैव स्यात् ॥४७॥**

रसनायां मे मुद्रां दत्वा मामधिकारीकृतवतस्ते मदीयरसनाधीनता प्राप्ते-त्याह **रसनोक्तमिति**। हे शिव! मद्रसनोक्तं सर्वं कुरु, यतः इयं मे रसना तव नामाधिमुद्रिता। भवतः प्राप्ताधिकारा सा कार्यकरी यद्यद्वक्ति तत्तद् बाढं बाढमित्येव त्वयाभ्युपगमपूर्वमनुष्ठेयम्। तथा न करोषि चेद्, रसनादत्ता मुद्रा न गणिता स्यात्; मुद्रां त्वदाज्ञारूपां न गणयसि चेत् तवैव प्रभुता उच्छिन्ना स्यात्। एवं च त्वन्मुद्रासत्कारायैव त्वया मद्वचनानुष्ठान-मवश्यमापतितम् ॥ ४७ ॥

---

३०. °लेख्यपत्रे—R. ३१. प्रभुता छिन्ना—R. ३२. तद्दारिद्र्ये भै°—R.

अत्याटिनं करालं भिक्षायुक्तं कपालशूलकरम् ।
[32] मद्दारिद्र्यं भैरवरूपं कुरु चार्धचन्द्रयुतम् ॥ ४८ ॥

अत्याटिनमिति । अत्याटिनं अतिभ्रमणशीलं करालं घोरं भिक्षायुक्तं भैक्षयाञ्चोपेतं कपालशूलकरं परमेश्वरपक्षे कपालः शूलश्च करे यस्य सः, तमिति । दारिद्र्यपक्षे कपालस्य शूलः वेदना, तं करोति, तमिति । एवं भैरवरूपं भैरवस्य तव रूपमिव रूपं यस्य तम्, भैरवं भयङ्करं रूपं यस्य तमिति च । मद्दारिद्र्यं अर्धचन्द्रयुतं कुरु भैरवरूपसंपूर्त्यै चन्द्रशेखरं च विधेहि । अर्धचन्द्र इति निष्कासनकर्मणि साधोर्हस्ताभिनयस्य नाम । तद्युतं कुरु, निष्कासयेति भावः ॥ ४८ ॥

[33] दारिद्र्यचण्डरश्मौ प्रतपति केदारवच्च मयि शुष्के ।
[34] जलधरतायां सत्यां त्वयि शिव नाद्यापि समुपैषि ॥ ४९ ॥

दारिद्र्येति । दारिद्र्यचण्डरश्मौ निर्धनतासूर्ये प्रतपति मयि च केदारवत्क्षेत्रवच्च शुष्के सति, त्वयि च जलधरतायां मेघतायां सत्यां, हे शिव, नाद्यापि समुपैषि । मामुदकवर्षैः सम्यगार्द्रीकर्तुं प्लावयितुं चेति शेषः । 'जलधरता या सत्यं तव शिव नाद्यापि समुपैति' इति वा पाठः । या जलधरता तव सत्यं वर्तते सा नाद्यापि मदार्द्रीकरणाय समुपैतीत्यर्थः । जलधरो मेघः, शिवश्च गंगाधरत्वाज्जलधरः ॥ ४९ ॥

दारिद्र्याख्यमनोभूः क्लीबं चेतोऽपि मोहयत्यनिशम् ।
एनं लीनं कर्तुं धन्यः [35]कोऽन्यस्त्वदन्योऽस्ति ॥ ५० ॥

दारिद्र्येति । दारिद्र्याख्यमनोभूः दारिद्र्याभिधमन्मथः क्लीबमपि चेतोऽनिशं मोहयति । एनं दारिद्र्यमन्मथं लीनं कर्तुं नाशयितुं त्वदन्यः त्वद्व्यतिरिक्तो धन्यः कोऽन्यो अस्ति । न कोऽपि इत्यर्थः । यतस्त्वं मन्मथदाही ततस्त्वदन्यो कोऽत्रेष्टे ॥ ५० ॥

---

३३. दारिद्र्ये चण्ड°—R.
३४. जलधरता या सत्यं तव शिव नाद्यापि समुपैति—R.
३५. कोन्यः स्त्वद°—M, P ; कोन्यः स्वद°—R.

**भालानलाक्षियुक्तस्त्रिजगति नान्यो मदन्य इति ।**
**गर्वं मा वह यावद्दारिद्र्याग्निः कपाले मे ॥ ५१ ॥**

**भालानलेति** । भाले अनलाक्ष्णा वह्निरूपेण नेत्रेण युक्तः मदन्यः मद्भिन्नः अन्यः त्रिजगति न इति नास्तीति मा गर्वमुद्वह, यतोऽहं ते प्रतिद्वन्द्वी प्राप्तः । यावत् मे कपाले दारिद्र्याग्निः अस्तीति शेषः ॥ ५१ ॥

**चेतः कुरु मा कलहं तव वैक्लव्येऽपि शम्भुना प्रभुणा ।**
**न वदति यद्यपि भर्ता तवोपकर्ता स एवास्ति ॥ ५२ ॥**

**चेत इति** । हे चेतः ! तव वैक्लव्येऽपि व्याकुलतायामपि प्रभुणा शम्भुना त्वं मा कलहं कुरु । भर्ता यद्यपि न वदति, एतत्ते करोमि इत्यादिकं न वदति, तथापि स एव तव उपकर्ता अस्ति । नान्यतस्त उपकारो भावी, स च अवश्यमुपकरिष्यत्येव ॥ ५२ ॥

**अयि चित्त वित्तलेशे सहजप्रेम्णा कियन्नु [३६]लुब्धमसि ।**
**न तथापि तद्वियोगः केवलमास्ते शिवेनापि ॥ ५३ ॥**

**अयीति** । अयि चित्त । वित्तलेशे सहजप्रेम्णा कियन्नु लुब्धमसि ? कियदिव लोभि अतः कृच्छ्रगतं च असि ? तथापि न केवलं तद्वियोगः वित्तलेशवियोगः अपि तु शिवेनापि वियोगः अस्ति । न केवलं वित्तं न प्राप्तम् अपि तु शिवोऽपि न प्राप्तः । वित्ते यावत् सहजं प्रेम यावांश्च लोभः कृतः, तस्य लेशोऽपि यदि शिवे कृतः, त्वया एतावता शिवो लब्धः स्यादिति भावः ॥ ५३ ॥

**चेतःकीर विहारं परिहर परितः स्वयं प्रयत्नेन ।**
**अत्तुं कालबिडालो धावति [३७]शिवपञ्जरं प्रविश ॥ ५४ ॥**

**चेत इति** । हे चेतःकीर मानसरूपशुक ! स्वयं रक्षकजनहीनं परितः विहारं प्रयत्नेन परिहर । कालबिडालः मृत्युरूपो मार्जारः अत्तुं त्वां भक्षयितुं धावति । शिवपञ्जरं प्रविश । तत्रस्थं त्वां स कालबिडालो न किमपि कर्तुं पारयति ॥ ५४ ॥

---

३६. कियन्नु लब्ध°—M ; कियन्न लुब्ध°—P.
३७. °पञ्जरं सदा प्रविश—R.

**चेतःसदागते त्वं प्रत्याशावात्ययानुगतमूर्तिः ।**
**मा वह विषयारण्ये लीनो भव सच्चिदाकाशे ॥ ५५ ॥**

चेत इति । हे चेतस्सदागते चेतोमारुत । प्रत्याशा एव वात्या तया अनुगता मूर्तिः यस्य सः । वात्या प्रबला वातसंहतिः । तादृशस्त्वं विषयारण्ये मा वह; आशावात्याशून्ये सच्चिदाकाशे सच्चिदम्बररूपे भगवति लीनो भव, तत्र शान्तिमुपयाहि ॥ ५५ ॥

**चेतः शृणु मद्वचनं मा कुरु रचनं मनोरथानां त्वम् ।**
**शरणं प्रयाहि शर्वं सर्वं[३८] सकृदेव सोऽर्पयिता ॥ ५६ ॥**

चेत इति । हे चेतः । मद्वचनं शृणु । मनोरथानां रचनं त्वं मा कुरु । शर्वं शरणं प्रयाहि । सः सकृदेव एकपद एव सर्वं तत्तन्मनोरथविषयीभूतं सर्वं अर्पयिता अर्पयिष्यति । तवेति शेषः ॥ ५६ ॥

**भ्रातः शृणु मच्चेतो मा नय कालं त्वितस्ततो भ्रमणात् ।**
**कालक्षेपेच्छा चेदवलम्बय कालकालं त्वम् ॥ ५७ ॥**

भ्रात इति । हे भ्रातो मच्चेतः । शृणु अवधेहि । इतस्ततो भ्रमणात् भ्रमणद्वारा कालं मा नय । कालक्षेपेच्छा कालं यापयितुमिच्छा चेत्, त्वं कालकालं यमनियामकं शिवमवलम्बय । तत्तद्भोगेप्सया, इतस्ततो भ्रमन् त्वं कालेन याप्यसे; यदि तत्त्वतस्तव कालमेव क्षपयितुमिच्छा, तत्र कालकालाश्रयणमेव परमोपायः ॥ ५७ ॥

**अयि चेतोविहग[३९] त्वं विषयारण्ये भ्रमन्नसि श्रान्तः ।**
**विश्रामकामना चेच्छिवकल्परुहे चिरं तिष्ठ ॥ ५८ ॥**

अयि चेत इति । अयि चेतोविहग ! विषयारण्ये भ्रमन् श्रान्तोऽसि । ते विश्रामकामना चेत् शिवकल्परुहे शिवरूपकल्पपादपे चिरं तिष्ठ । स हि ते निकामं विषयाटवीपर्यटनक्लान्तस्य परां विश्रान्तिं प्रदास्यति ॥ ५८ ॥

---

३८. R om. सर्वं.   ३९. °विहगस्त्वं—P.

चेतोमधुकर दूरं दूरं कमलाशया[40] कुतो यासि ।
ध्यानादनुपदमेतच्छिवपदकमलं तवायाति ॥ ५९ ॥

चेत इति । हे चेतोमधुकर चेतोभृङ्ग ! कमलाशया सरोजाशया धनाशया च । कमलं सरोजम्, कमला लक्ष्मीः । दूरं दूरमतिदूरं कुतः कस्मात् कारणाद् यासि । ध्यानाद् ध्यानमात्रादेव शिवपदकमलं तव आयाति । ध्यानमेव पर्याप्तं, न तु दूरदूरयानमपेक्षितम्; तव न गमनप्रयासः, तदेव त्वामायाति इति व्यतिरेकः ॥ ५९ ॥

चेतश्चकोर तापं भूपं संसेव्य किं वृथा यासि ।
यदि चन्द्रिकाभिलाषो निकषा भव चन्द्रचूडस्य ॥ ६० ॥

चेत इति । हे चेतश्चकोर ! भूपम् भूपतिं उदरपूर्त्यै संसेव्य तदप्राप्त्या किं वृथा तापं यासि । यदि चन्द्रिकाभिलाषः चन्द्रचूडस्य निकषा समीपे भव । चकोरश्चन्द्रिकया हि वर्तयति । हे चेतश्चकोर तवोचितां वृत्तिं चन्द्रिकारूपां चन्द्रचूडो दास्यति, न तु भूपः ॥ ६० ॥

चेतःकुरङ्ग गीते रक्तं चेतस्तवास्त्वनवगीते[41] ।
भगवद्गीतागीते नगजाकलिते[42] तदारचय ॥ ६१ ॥

चेत इति । हे चेतःकुरङ्ग हे चित्तमृग ! अनवगीते अनिन्दिते गीते गानवस्तुनि ते चेतो रक्तमस्तु । तत् चेतः भगवद्गीतागीते भगवद्गीतासु गीते नगजाकलिते पार्वतीस्वीकृते शिवे आरचय कुरु । कुरङ्गस्य गीतेऽभिनिवेशः प्रसिद्धः । शिववादिभिः अप्पय्यदीक्षितादिभिः भगवद्गीताप्रतिपाद्यपुरुषस्य शिवत्वमुक्तम् । " अपि च ' गीतासु वासुदेवेन यत्पार्थाय प्रदर्शितम् । रूपं निर्वर्णितं तच्च शैवमेव प्रतीयते ॥ ' 'दर्शयामास पार्थाय परमं रूपमैश्वरम् । ' इति तत्रैव तस्यैश्वरत्वकीर्तनाद्" इत्यादिकेन सन्दर्भेण शिवतत्त्वविवेके आनन्दलहरीतद्व्याख्ययोश्च, ' गीतासु गूढमुदितं भवतः परत्वम् ' इति भारततात्पर्यसंग्रहे च प्रपञ्चितोऽयमर्थः श्रीमदप्पय्यदीक्षितैः ॥ ६१ ॥

---

४०. कमलाशयान् कुतो—P. ४१. चेतस्त्वयास्त्यनवगीते—R; चेतःस्तवास्ति नवगीते—P. ४२. गिरिजा°—P.

**रसने निन्दाव्यसने पैशुन्ये वा न वाग्मितां याहि ।**
**त्रिपुरारिनाममालां जितकालां शीलयाशु त्वम् ॥ ६२ ॥**

'चेतः कुरु मा कलहम्' ( ५२ ) इत्यारभ्य 'चेतः कुरङ्ग' ( ६१ ) इत्यन्तम् अन्तरिन्द्रियस्य मनसः संबुद्धिः । इतः परं कर्मेन्द्रियाणां प्रत्येकं संबोधनम् । तत्र प्रथमं रसनेन्द्रियमाह **रसन इति** । हे रसने जिह्वे ! निन्दाव्यसने परदूषणदुरभिनिवेशे पैशुन्ये वा रहोमित्रभेदिनि अपवादभाषणे वा वाग्मितां वाक्प्रगल्भतां न याहि । जितकालां जितः कालः मृत्युः यया सा, ताम् । जितकालामित्यनेन उत्तमकालक्षेपोपायभूतामित्यप्यर्थः । तादृशीं त्रिपुरारेः नाममालां 'शम्भो शंकर' इत्यादिकां नामावलिं त्वमाशु शीलय । परनिन्दाव्यसनेन मा मृत्युमुखं प्रविश; शिवनामान्युच्चार्य मृत्युं जयेति भावः ॥ ६२ ॥

**रसने रसान् समस्तान् रसयित्वा तद्विवेचने कुशला ।**
**असि तद्वदाशु[43] पश्येः शिवनाम्नः को रसोऽयमिति ॥ ६३ ॥**

यथा च निन्दितभाषणादिषु जिह्वाया रुचिः तथा मधुरादिभोजनरसेषु च तस्या रुचिः । तद्रुचिं विषयीकृत्य पुना रसनां संबोधयति **रसन इति** । हे रसने ! समस्तान् षडपि केवलान् मिश्रभेदांश्च रसान् आम्लमधुरादीन् रसयित्वा तद्विवेचने कुशला, इदं मधुरम् इत्यादि वक्तुं समर्था असि । तद्वत् तथा शिवनाम्नः शिवनामरूपभोज्यवस्तुनः अयं रसः इति आशु पश्येः । किं भोज्यान्तरवदयमुत ततोऽपि आस्वाद्य इति भवत्येव पश्येत् ॥ ६३ ॥

**शिवनामसल्लतां[44] त्वं रसनापल्लव कदापि न विहातुम् ।**
**यदि वाञ्छसे[45] तदा मा कोमलतां सर्वथा जहिहि ॥ ६४ ॥**

**शिवनामेति** । हे रसनापल्लव रसनाकिसलय ! यदि शिवनामसल्लतां शिवनामरूपां सतीं शोभनां वल्लीं कदापि विहातुम् न वाञ्छसे यदि । वाञ्छसे इति चिन्त्यमात्मनेपदम् । 'वाञ्छसि' इति चोपलभ्यमाने साधुपाठे पादे

---

४३. असि तच्चैदाशु [ Probably for चेत्तदाशु ] पश्य शिवनाम्न्यत्र को—R. ४४. °सत्कृतां—M. ४५. वांछसि—P.

मात्रैकन्यूनतापत्तिः । 'यदि वाञ्छास्ति तदा मा' इति स्यात्तृतीयपादपाठः । तदा कोमलतां सर्वथा मा जहिहि मा त्यज । यावच्च त्वं कोमलं भवसि, तावच्च त्वयि शिवनामवासो नियतं भाविष्यति ॥ ६४ ॥

**हालाहलस्य तापः शशिना गङ्गाम्बुना न यदि याति ।**
**शिव मा गृहाण भुजगान् मद्रसनापल्लवे स्वपिहि ॥ ६५ ॥**

**हालाहलस्येति** । यदि हालाहलस्य त्वया भुक्तस्य तापः शैत्योपायभूतेन शशिना गङ्गाम्बुना च न याति, स कथं विषवासभूतैः भुजगैः शाम्येत् । तद् भुजगान् मा गृहाण । शीतले मद्रसनापल्लवे स्वपिहि निद्रां याहि । पल्लवसंस्तरशयनं हि प्रसिद्धः शैत्योपचारः ॥ ६५ ॥

**लोचन कोऽभूल्लाभः सर्वानेव द्विलोचनान् वीक्ष्य ।**
**दृष्टस्त्रिलोचनश्चेत् सफलं जन्मैव ते भावि ॥ ६६ ॥**

इतः परं त्रिभिः श्लोकैः दर्शनेन्द्रियप्रतिबोधः । **लोचनेति** । हे लोचन ! सर्वान् द्विलोचनानेव केवलं मनुष्यान् वीक्ष्य को लाभोऽभूत् । तव इति शेषः । न कोऽपीत्यर्थः । मनुष्याधिकः त्रिलोचनः शिवः दृष्टश्चेत्, ते जन्मैव सफलं भावि ॥ ६६ ॥

**नालोकते यदि त्वां [४६]मन्नेत्रं कृष्णमस्तु मुखमस्य ।**
**स्वां त्र्यक्ष दक्षतां मे दर्शय नयनावलोकस्य ॥ ६७ ॥**

**नालोकत इति** । यदि मन्नेत्रं त्वां नालोकते, अस्य नेत्रस्य मुखं तारकारूपं कृष्णं तमोरूपमस्तु । मन्नेत्रमध्यं तमोरूपमतस्त्वदालोकनाक्षमम् । हे त्र्यक्ष प्रकाशरूपसूर्यचन्द्राग्निमयनेत्रत्रययुक्त ! त्वं नयनावलोकस्य स्वां दक्षतां स्वं दर्शनसामर्थ्यं मे दर्शय । यद्यप्यहं त्वां न द्रष्टुं शक्नोमि तथापि न ते मद्दर्शनं दुष्करम् ॥ ६७ ॥

---

४६. यन्नत्र [ Probably for यन्नेत्रं ]—R.

त्वं लोचनान्धकारे द्रष्टुं[४७] वस्त्वन्धकारभिन्नं किम् ।
वाञ्छस्यनेन सङ्गेऽदृश्यमपीदं त्वया दृश्यम् ॥ ६८ ॥

त्वमिति । हे लोचन ! अन्धकारे तमसि अन्धकारभिन्नं वस्तु तेजः, ज्ञानमिति यावत्; त्वं द्रष्टुं वाञ्छसि किम्? नैतत् शक्यम् । अनेन शिवेन ज्ञानतेजोरूपेण सङ्गे अदृश्यमपि साक्षात्कर्तुमशक्यमपि इदम् अन्धकारभिन्नं वस्तु ज्ञानम् दृश्यं भवति । अज्ञानाश्रये कदापि न ते ज्ञानप्राप्तिः, ज्ञानप्राप्तेश्च शिवोपासनमवश्यमित्युक्तं भवति ॥ ६८ ॥

श्रवण सखे शृणु मे[४८] त्वं यद्यपि जातो बहुश्रुतोऽस्ति भवान् ।
शब्दातीतं श्रोतुं शिवमन्त्रात् कोऽपरो मन्त्रः ॥ ६९ ॥

एकेन श्रवणेन्द्रियमुपदिशति श्रवण इति । हे सखे श्रवण ! यद्यपि भवान् बहुश्रुतो जातोऽस्ति, तथापि मे शृणु । जात इत्यादि पुंलिंगशब्दानां सखिपदे अन्वयो द्रष्टव्यः । ममेदमवधारय । शब्दातीतं शब्दमार्गमतिक्रम्य वर्तमानं परं तत्त्वं शिवस्वरूपं श्रोतुं नादरूपेण भासमानं श्रोतुं शिवमन्त्रात् 'नमः शिवाय' इति रूपात् कोऽपरो मन्त्रः । तेऽस्तीति शेषः । न हि बहुश्रुतवतोऽपि श्रवणेन्द्रियस्य स्वभावोल्लङ्घनेन स्वगुणभूतात् शब्दादेव दविष्ठं वस्तु श्रोतुं शक्यम् । तदपि अनुभवविषयं स्याद् यदि शिवमन्त्रः साध्यत इत्युक्तं भवति ॥ ६९ ॥

घ्राणं[४९] प्राणसखो मे भवसि भवान् पार्थिवोऽस्ति किमु वान्यत् ।
शिवपदकमलामोदे मोदं गन्तासि यदि शीघ्रम् ॥ ७० ॥

घ्राणेति । घ्राणेन्द्रियमाह । हे घ्राण ! त्वं प्राणसखो मे भवसि । उच्छ्वासनिःश्वासमार्गभूतनासिकाग्रवृत्तेः अस्मिन्निन्द्रिये प्राणसखत्वम् । यदि शिवपदकमलामोदे परिमलेषु परमप्रकृष्टे शिवपादसरोजपरिमले मोदमानन्दं शीघ्रं गन्तासि गमिष्यसि, तदा भवान् पार्थिवोऽस्ति, किमु वान्यत् । नूनं त्वं भाग्यभाङ् महाराज एवासि, किमन्यत् । पृथिव्या अयमिति पार्थिवो

---

४७. दृष्टं वस्त्वंधकारिभिन्नां किं—R. द्रष्टुं वस्त्वंधकारिं कि—M,P.
४८. P om. मे. ४९. प्राण प्रा°—R.

घ्राणः घ्राणेन्द्रियम्। गन्धवत्त्वस्य पृथ्व्या लक्षणत्वात् घ्राणेन्द्रियस्य स्वभावत एव पार्थिवत्वम्॥ ७०॥

रामास्पर्शसुखे ते नितरां भो विग्रहाग्रहोऽस्ति यदि।
आलिङ्गयार्धरामं रामाऽभिन्नः स्वयं भवसि॥ ७१॥[50]

रामेत्यारभ्य द्वाभ्यां श्लोकाभ्यां स्पर्शेन्द्रियं बोधयति। भो विग्रह! स्पर्शेन्द्रियाधिष्ठानभूतशरीर रामास्पर्शसुखे स्त्रीस्पर्शसुखे ते यदि नितरामाग्रहोऽस्ति तदा अर्धरामम् अर्धनारीश्वरमालिङ्गय आलिङ्ग तन्मयतां गच्छ। ततश्च स्वयं रामाभिन्नो भवसि। शिवसारूप्यलाभात् त्वमपि रामाभिन्नरूपो भविष्यसि॥ ७१॥

विग्रह विग्रहमेव त्वं कुरु देवेन नाऽमुना सख्यम्।
रुचिरप्यस्मिन् शम्भौ जनयत्यरुचिं स्वदेहेऽपि॥ ७२॥

विग्रहेति। हे विग्रह मच्छरीर! देवेन शिवेन सह विग्रहं कलहमेव कुरु। अमुना सह न सख्यं कुरु। यतः अस्मिन् शम्भौ रुचिरपि जनस्य स्वदेहेऽपि अरुचिं विरक्तिं जनयति। शिवानुरागात् ते स्वस्मिन् विरागो जायेत। को हि नाम सचेतनः स्वप्रतिकूलीभूतफलप्रदमभिनिवेशमाद्रियेत। वस्तुत उपदेशस्तु 'कृमिरोगादिदुष्टे मर्त्ये देहे जुगुप्सां या पोषयति, तां शिवे भक्तिं परिचिनु' इति। मा कुर्विति निषेधात् 'अत्ता एत्थ णिमज्जइ' (गाथा स. ७·६७) इतिवत् विधिरूपोऽभिप्रायः॥ ७२॥

संमीलय[51]याशु रामां त्वद्वामाङ्गान्मया समं शम्भो।
जातं ममापि यस्माद् दुःखेनार्धं शरीरमिदम्॥ ७३॥

संमीलयेति। मया समं यथा स्यात् तथा हे शंभो त्वद्वामाङ्गात् त्वच्छरीरवामभागाद् रामां पत्नीम् आशु संमीलय तिरस्कुरु। कथं तत् त्वया समं स्यादिति चेदाह यस्मात् कारणात् दुःखेन ममापि इदं शरीरमर्धं जातम्। पार्वत्यभावे शिवस्यार्धावशिष्टशरीरत्वात् साम्यम्॥ ७३॥

---

५०. मालिंग तया सार्द्धं for आलिंगयार्धरामं—R; भवानस्ति for भवसि–R. ५१. संलीनयाशु—R.

**अपराधकारिणं मां मत्वा शम्भो यदि त्यजस्येवम्**[५२] ।
**व्याधः शिरसि पदं ते दत्वा न जगाम किं मुक्तिम् ॥ ७४ ॥**

**अपराधकारिणमिति** । हे शम्भो ! मामपराधकारिणं तवापचारं कृतवन्तं मत्वा यद्येवं त्यजसि, व्याधः ते शिरसि पदं दत्वा मुक्तिं किं न जगाम ? शिरसि पादकरणादधिकोऽप्यपराधोऽस्ति वा ? तथापि कण्णप्पनामा व्याधभक्तः कालहस्तिक्षेत्रे प्रत्यहं मृगयान्ते त्वल्लिङ्गमेत्य पूर्वेद्युः प्रक्षिप्तपुष्पाणि पदैव निरस्यन् नूतनानि कुसुमानि क्षिपंश्च त्वया न किं मुक्तिं प्रापितः । प्रसिद्धा चेयं कथा उपमन्युप्रोक्तशिवभक्तविलासादिप्रतिपादितासु दाक्षिणदेशीयत्रिषष्टिशिवभक्तकथासु ॥ ७४ ॥

**पार्थः कलहं धनुषा ताडनमपि मूर्ध्नि ते न किं कृतवान् ।**
**तत्रापि ते प्रसन्नं चेतः सन्ने मयि कुतो न ॥ ७५ ॥**

**पार्थ इति** । पार्थः अर्जुनः कलहं त्वया सह युद्धं, ते मूर्ध्नि युद्धमध्ये धनुषा ताडनमपि किं न कृतवान् । तत्रापि तथा युद्धताडनादिभिरपराधिनि तस्मिन्नपि ते चेतः प्रसन्नम् पाशुपतास्त्रप्रदानेन । सन्ने न केवलं अनभिद्रुह्यति, परं स्वदुःखैः खिन्ने च मयि कुतस्ते चेतो न प्रसन्नम् ? कौरवजयार्थं दिव्यास्त्रलाभाय अर्जुनस्तपश्चचार; किरातवेषेण वराहमनुधावता शिवेन स युध्यमानः अन्ते तत्प्रसादेन पाशुपतास्त्रं लेभे इति प्रसिद्धैव कथा भारते किरातार्जुनीयकाव्ये च । मध्येयुद्धं धनुषा शिवशिरस्ताडनं च भारते वने कैराते ३९ अध्याये उक्तम् 'प्रगृह्याथ धनुष्कोट्या ज्यापाशेनावकृष्य च । मुष्टिभिश्चापि हतवान् वज्रकल्पैर्महाद्युतिः ॥' इति । 'गाण्डीवेन किरीटिना सरभसं चूडान्तरे ताडितः' इति च केनापि कविनोक्तम् । शिवलिङ्गबिम्बेषु मूर्ध्नि दृश्यमाना रेखा च 'पार्थप्रहार' इत्युच्यते ॥ ७५ ॥

---

५२. त्यजस्येव—M.

त्वयि तुष्टे रुष्टे वा शिव का चिन्ता स्वदुःखभङ्गे मे ।
उष्णं* वानुष्णं वा[५३] शमयति सलिलं सदैवाग्निम् ॥ ७६ ॥

**त्वयीति** । हे शिव ! त्वयि तुष्टे रुष्टे सति वा मे स्वदुःखभङ्गे दुःखनाशविषये का चिन्ता ? कापि चिन्ता नास्त्येव । उष्णं वा अनुष्णं शीतं वा सलिलं सदैव अग्निं शमयति । यथोक्तमन्यत्र 'क्रोधोऽपि देवस्य वरेण तुल्यः' इति ॥ ७६ ॥

दोषाकरे द्विजिह्वे रतिमतिशयितां करोषि यदि शम्भो ।
अहमस्मि तथा वितथा कुरुषे [५४]मां दृक्पथातीतम् ॥ ७७ ॥

**दोषाकर इति** । दोषाकरे चन्द्रे दोषाणामाकरे च । द्विजिह्वे सर्पे खले च । अतिशयितां रतिं महतीं प्रीतिं तदाभरणीकरणपर्यवसायिनीं यदि करोषि, अहं तथा अस्मि दोषाणामाकरः खलश्चास्मि । मां तु वितथा वृथा दृक्पथातीतं अदर्शनयोग्यं कुरुषे ॥ ७७ ॥

चेतो मदीयमेतत्सेवाचौर्ये यदि प्रसक्तं ते ।
दण्डय नितरां शम्भो सर्वस्वं लुण्ठयैतस्य ॥ ७८ ॥

**चेत इति** । यदि मदीयमेतत् चेतः ते सेवाचौर्ये सेवायाः अकरणेन तद्वञ्चने प्रसक्तम्, हे शम्भो एतच्चेतो नितरां साधु दण्डय । दण्डप्रकारमाह—एतस्य चेतसः सर्वं लुण्ठय, त्वं चोरय । तत् निकामं रिक्तीकुरु । चेतसस्तत्तद्विषयान्तरसत्त्वादेव भगवत्सेवासक्तिर्न जायते । ततश्च 'यस्यानुग्रहमिच्छामि तस्य वित्तं हराम्यहम्' इति उक्तरीत्या मच्चेतसः सर्वं विषयं मुषाणेति भावः । हर इति नाम्नश्चेदं सदृशं स्यात् ॥ ७८ ॥

---

* Cf. स्निग्धमालपसि रूक्षमेव वा
त्वत्कथैव सखि मे रसायनम् ।
शीतलं सलिलमुष्णमेव वा
पावकं हि शमयेन्न संशयः ॥ विद्याकरसहस्रकम् ९८३
( Edited by Umesh Mishra, Allahabad University Publications, Sanskrit Series–Vol. II, Allahahad, 1942. )

५३. P om. वा. ५४. मा—R.

**सदनं प्रत्यागमनं कुशलप्रश्नोक्तिरस्तु दूरतरे ।**
**आलोकनेऽपि शम्भो यदि सन्देहः कथं जीवे ॥ ७९ ॥**

**सदनमिति** । मैत्रीमर्यादया भगवन्तं पृच्छति । सदनं प्रत्यागमनम् मम गृहं प्रति आगमनम् । कुशलप्रश्नोक्तिः किमहं कुशली वर्ते इति प्रश्नवचश्च दूरतरे अस्तु सर्वथा मास्तु नाम । यदि आलोकनेऽपि परस्परसन्दर्शनविषयेऽपि सन्देहः संशयः भवेत्, हे शम्भो कथं जीवे जीवामि ॥ ७९ ॥

**आवाहितः स्वभक्तैस्त्वरयैवायासि[55] सर्वपाषाणे ।**
**चित्तोपले मदीये हे शिव वस्तुं कुतोऽस्यलसः ॥ ८० ॥**

**आवाहित इति** । स्वभक्तैरावाहितः सर्वपाषाणे शिलामयबिम्बे सर्वस्मिन्नपि त्वरयैव आयासि । तादृशस्सन् मदीये चित्तोपले चित्तमेव उपलः शिला तत्र वस्तुं हे शिव कुतोऽलसोऽसि । 'ओः शम्भोः पलो बोधकः' (अमरव्याख्यासुधा २. ३. ४) इति उपलशब्दनिरुक्तेः मच्चित्तोपले वासस्ते आवश्यकतया आपतित एव । न च मच्चित्तशिला बिम्बीभूतशिलान्तरेभ्यः कठिनतरा, यतः सैव न वासयोग्या ते ॥ ८० ॥

**वृषभे पशौ दया ते कियती शम्भो पशुप्रियोऽसि यदि ।**
**विषयविषाशनतोऽहं पशुरेवास्मीति मां पाहि ॥ ८१ ॥**

**वृषभ इति** । हे शम्भो ! पशौ वृषभे स्ववाहनभूते ते कियती दया । स हि त्वया सम्यग्रक्ष्यते । यदि एवं पशुप्रियोऽसि अहं पशुरेवास्मीति कृत्वा मां विषयविषाशनतः विषयरूपविषदुष्टवस्तुभुक्तेः पाहि । त्वं पशुपतिः, पशुं च सदा रक्षसि, वयं च पशवः सविषाविषविवेकरहिताः विषयाख्यदुष्टाशनाद् यथा न विपद्यामहे, तथा रक्ष ॥ ८१ ॥

---

५५. °स्त्वरयैवासि—R.

**त्वयि दृष्टौदासीन्यं तत्स्पर्धातो विवर्धते दैन्यम् ।**
**मयि तज्जेतुं त्वरया प्रेषय निकटेऽस्ति यत् सैन्यम् ॥ ८२ ॥**

**त्वयीति ।** त्वयि मद्विषयम् औदासीन्यं दृष्ट्वा तत्स्पर्धातः तत्संघर्षादिव मम दैन्यं च विवर्धते । यथा यथा त्वमुदासीनः तथा तथाहं दीनः । मयि वर्तमानं तद् दैन्यं जेतुं यत्सैन्यं ते निकटेऽस्ति तत्प्रेषय । सैन्यं प्रमथगणरूपम् ॥८२॥

**परिपालयाम्यहं त्वां निकटेन मया[५६] किमस्ति ते कार्यम् ।**
**मैवं दूरे रमणे सुभृताऽपि[५७] न मोदते साध्वी ॥ ८३ ॥**

**परिपालयामीति ।** त्वां परिपालयामि; निकटेन मया समीपवर्तिना मया, ते किं कार्यमस्ति इति भगवतः प्रश्नमुत्प्रेक्ष्योत्तरमाह—मैवम् । रमणे दूरे सति सुभृतापि सुसंरक्षितापि साध्वी न मोदते, नानन्दं विन्दते । तव सामीप्यमेव निकाममभिलषणीयं मे इति भावः ॥ ८३ ॥

**कतिकतिवारं जननं तव नो जातं न मत्स्मृतिः क्वापि ।**
**इति कुपितोऽसि यदि त्वत्पदयोर्निदधामि मूर्धानम् ॥ ८४ ॥**

**कतिकतीति ।** कतिकतिवारं तव जननं नो जातम् । क्वापि कस्मिन्नपि जन्मनि न मत्स्मृतिः ते जाता इति यदि कुपितोऽसि, त्वत्पदयोः मूर्धानं निदधामि । तव पादयोः अद्य शरणं गच्छामि ॥ ८४ ॥

**शिव शङ्कर स्मरारे किञ्चित्प्रष्टव्यमस्ति तत्कथय ।**
**वञ्चनमेव करिष्यसि किं वा कालान्तरे प्रीतिम् ॥ ८५ ॥**

**शिवेति ।** हे शिव शङ्कर स्मरारे ! किञ्चित्प्रष्टव्यमस्ति । तत्कथय । किं वञ्चनमेव करिष्यसि, अनुग्रहं अप्रदर्श्य किं वञ्चयिष्यसि, किं वा कालान्तरे भविष्यति काले ते प्रीतिं करिष्यसि । सर्वथा मा मां वञ्चय; मा च प्रीतिं चिरकालादनन्तरं प्रदर्शय, किन्तु अद्यैव प्रकटयेति प्रार्थयति ॥ ८५ ॥

---

५६. ममास्ति ते कार्यं—R. ५७. सुभृता नो मो°—R.

**योे यन्न[५८] वेत्ति दुःखं कर्म स तस्मिन्नियोजयतु शम्भो ।**
**भिक्षादुःखं जानंस्तत्र कथं मां नियोजयसि ॥ ८६ ॥**

**य इति** । हे शम्भो ! यः पुरुषः यद् दुःखं कर्म न वेत्ति, स तस्मिन् कर्मणि पुरुषान्तरं नियोजयतु । इदं कर्म इयद्दुःखमिति अजानानः तस्मिन् कर्मणि पुरुषान्तरं व्यापारयतु । त्वं तु न तथा । भिक्षादुःखं जानन् भिक्षाटनावसरे, तत्र भिक्षाकर्मणि मां कथं नियोजयसि । यथा चाह रामभद्रदीक्षितः रामप्रसादस्तवे—

'त्वयि प्रागर्थित्वं भजति बलियज्ञे रघुपते
महत्त्वं ते लुप्तं यदजनि वपुर्वामनतया ।
परेषां किं ब्रूमस्तदिह मयि निक्षिप्य करुणां
यथा नाहं याचे कमपि धनिनं कल्पय तथा ॥ ८६ ॥

**काकूक्तिर्मुखदैन्यं शिव मे बाष्पस्तथाश्रुसम्पातः ।**
**त्वय्येकस्मिन् पुरुषे[५९] सर्वमिदं निष्फलं भवति ॥ ८७ ॥**

**काकूक्तिरिति** । हे शिव ! काकूक्तिः साभिप्रायस्वरभेदेन उक्तिः । मुखदैन्यम् । बाष्पः द्वित्राः अश्रुबिन्दवः, अश्रुसंपातः प्रचुरः । सर्वमिदं त्वय्येकस्मिन् पुरुषे । परुष इति पाठे अकरुणे त्वयि इत्यर्थः । निष्फलं भवति । एषु दुःखानुभावेषु एकैकोऽपि पुरुषसामान्यस्य करुणामुत्पादयितुमलम् । परुषे त्वय्येकस्मिन्नेव संमिलिता अपि एते निष्फलाः ॥ ८७ ॥

**शिव देहि मे स्वभक्तिं तृष्णा स्वयमेव यास्यति ततो मे ।**
**पतिमन्यत्र विषक्तं दृष्ट्वा कान्ता न किं त्यजति ॥ ८८ ॥**

**शिवेति** । हे शिव ! मे स्वभक्तिं त्वद्भक्तिं देहि । ततः मे तृष्णा विषयतर्षः विषयासक्तिर्वा स्वयमेव यास्यति । कथमिव । पतिमन्यत्र अन्यस्यां वनितायां विषक्तं बद्धानुरागं दृष्ट्वा कान्ता न त्यजति किम् । तं पतिमिति शेषः । मय्यसौ विरक्त इति स्वयमेव दूरीभवति ॥ ८८ ॥

---

५८. यो यं न—M, R. ५९. परुषे—M (where original पु is changed to प by means of yellow pigment ).

**गुणहीनोऽपि शिवाहं त्वत्करमुक्तोऽपि तत् पदं यास्ये ।**
**भ्रष्टोऽपि भूपहस्ताद्गुणतोऽपि शरो यथा लक्ष्यम् ॥ ८९ ॥**

**गुणेति** । हे शिव ! अहं गुणहीनोऽपि त्वत्करमुक्तोऽपि तत् परमं पदं यास्ये । चिन्त्यमात्मनेपदम् । अहं निर्गुणोऽपि अवलम्बकेन त्वत्करेण त्यक्तोऽपि मोक्षपदं प्राप्स्यामि । क इव । यथा गुणतोऽपि ज्यागुणाच्च भूपहस्ताद् अपि प्रयोक्तुः भ्रष्टः च्युतः शरो लक्ष्यं यास्यति ॥ ८९ ॥

**भक्तजनेष्वनुरक्तं धरणीधरकन्यया परिष्वक्तम् ।**
**प्रख्यातनामधेयं जयतितरां भागधेयं मे ॥ ९० ॥**

**भक्तेति** । प्रख्यातनामधेयं शिवपदस्य मङ्गलार्थकत्वेन प्रसिद्धनामधेयम् । मे भागधेयं शिवरूपं जयतितराम् ॥ ९० ॥

**फणिकुण्डलं वहन्ती[६०] श्रवणे ताटङ्कमप्यपरभागे ।**
**सितशोणकान्तियुक्ता काचिन्मद्रासना जयति ॥ ९१ ॥**

**फणीति** । काचिद् मद्रासना अर्धनारीश्वररूपा जयति । एकस्मिन् शिवभागे फणिकुण्डलम्, अपरस्मिन् पार्वतीभागे ताटङ्कमपि सौवर्णं कर्णभूषणं श्रवणे वहन्ती । सितया शिवभागे शोणया पार्वतीभागे कान्त्या युक्ता ॥ ९१ ॥

**[६१]आलिङ्गितोऽपि सव्ये शम्पातत्या शिवः प्रकृतितोऽयम् ।**
**करुणाम्बुपूर्णगर्भः कश्चिद्धाराधरो जयति ॥ ९२ ॥**

**आलिङ्गित इति** । सव्ये वामभागे शम्पातत्या पार्वतीरूपया विद्युत्संहत्या आलिङ्गितोऽपि प्रकृतितः स्वभावतः शिवः क्षेमंकरः । विद्युतः प्रायोनाशकत्वम्, तद्युक्तोऽपि प्रकृत्या शिवः । करुणाम्बुपूर्णगर्भः दयारूपजलपूर्णान्तरः अयं कश्चिद्धाराधरः मेघः अर्धनारीश्वरशिवरूपो जयति ॥ ९२ ॥

---

६०. वहंति—R, P.
६१. आलिंगितोपि सख्या शंपार्वत्या शिवप्रकृतितोयं—R.

जटिलं शिरःप्रदेशे निटिले कुटिलं गले तथा नीलम् ।
हृदयीकृताद्रिबालं [६२]विलसति कालं जयत् तेजः ॥ ९३ ॥

जटिलमिति । शिरःप्रदेशे जटिलं जटायुक्तं, निटिले भाले कुटिलं विषमाक्ष्णा, तथा गले नीलं कालकूटविषेण, हृदयीकृताद्रिबालं हृदयीकृता प्रेमपात्रीकृता अद्रिबाला पार्वती येन तत् । कालं जयत् यमनियन्तृ तेजः शिवरूपं विलसति ॥ ९३ ॥

धनुरेकत्र पिनाकं सशरं बिभ्रत् तथाऽपरत्राऽपि ।
शरमैक्षवं च चापं किञ्चित् तत् प्रेम मे जयति ॥ ९४ ॥

धनुरिति । एकत्र दक्षिणभागे सशरं पिनाकं धनुः बिभ्रत्, तथा परत्रापि सव्यभागेऽपि शरं कुसुममयम्, ऐक्षवं इक्षुविकारभूतं चापं च बिभ्रत् सत् किञ्चिन्मे प्रेम भक्तिविषयीभूतं अर्धनारीश्वररूपं वस्तु जयति ॥९४॥

वाञ्छितवितरणशीलं[६३] विचित्रलीलं निरालवालं च[६४] ।
ललनालतैकतानं कलये शिवकल्पभूमिरुहम् ॥ ९५ ॥

वाञ्छितेति । वाञ्छितवितरणशीलं अभीष्टदानशीलं, विचित्रलीलं विचित्राः आश्चर्यकर्यः लीला यस्य सः तम् । कल्पवृक्षच्छायायां हि देवानां विचित्रलीलाविलासाः भवन्ति । शिवपक्षे विषभक्षणादयो विचित्रा लीलाः । निरालवालं च, आलवालमपोजलपूरणाधारः तद्रहितम् । देववृक्षाणां जलपोषणावश्यकताभावात् । आलवालशब्दस्य लक्षणया पोषकसामर्थ्यसंभवात् जगत्पोषकस्येश्वरस्य पोषकान्तराभावात् शिवस्यापि निरालवालत्वम् । ललनालतैकतानं पार्वतीरूपा स्त्री एव लता तस्याम् एकतानम् एकप्रवणम्, अर्थात् सदा तदालिङ्गितम्, शिवकल्पभूमिरुहं शिव एव कल्पभूमिरुहः कल्पवृक्षः तं कलये ॥ ९५ ॥

---

६२. विकसति—R ; विलसितकालं—P.
६३. °विवरण°—R. ६४. तं for च—R.

परिहृतदुर्जनतिमिरं नगजानन्दैकसिन्धुवृद्धिकरम्[६५]।
नन्दितभक्तचकोरं वन्दे चन्द्रोदयं कञ्चित् ॥ ९६ ॥



परिहृतेति । चन्द्रोदयस्य प्रसिद्धानि फलानि तिमिरापहारः समुद्रवर्धनं चकोरप्रीणनं च । एवं शिवरूपचन्द्रोदयस्यापि दुर्जनपरिहारः पार्वतीहर्षप्रवर्धनं भक्तजनप्रीणनं च ॥ ९६ ॥

निखिलनिगमैकदुग्धां [६६]दानविदग्धां शुकादिमुनिदुग्धाम् ।
वपुषा सदैव मुग्धां कलये[६७] शिवकामधेनुमहम् ॥ ९७ ॥

निखिलेत्यनेन शिवं कामधेनुतया वर्णयति । निखिलनिगमाः सर्ववेदा एव एकं दुग्धं पयः यस्याः सा, ताम् । दाने विदग्धा पटवी ताम् । शुकादिमुनिभिः दोहकभूतैः दुग्धाम् । वपुषा मुग्धां मनोहराम् शिवकामधेनुमहं सदैव कलये ॥ ९७ ॥

नि[६८]त्यप्रभाभिरामं विदलितकामं सदार्धधृतभामम् ।
हृदि कोमलं निकामं श्रीशिवचिन्तामणिं वन्दे ॥ ९८ ॥

नित्येत्यनेन । शिवं चिन्तामणितया वर्णयति । नित्यप्रभया अभिरामम् स्वतःप्रकाशस्वरूपत्वात् । विदलितकामं दग्धमन्मथम् । मणिपक्षे विदलिताः पूरणद्वारा परिहृताः कामाः येन सः, तम् । सदा अर्धधृतभामम् अर्धे शरीरार्धे, धृता भामा स्त्री येन सः तम् अर्धनारीश्वरम् । सदा अर्धः वृद्धिः यस्य सः ।

---

६५. °सिद्धिवृद्धि°—R. ६६. दानवदुग्धां—R.

६७. मुग्धां शिवकामदुधां निकाममवलंबे—R.

६८. This stanza is om. by R and निर्व्याधि मे etc. is given as the 98th and

कुरु बहुशास्त्राभ्यासं साधय योगांश्च तेन सुलभोऽहम् ।
कथमत्र नायमात्मेत्यादि शृण्वन्मनः कुर्यात् ॥

is given as the 99th.

धृता भा कान्तिः मा लक्ष्मीश्च येन सः । सदार्थश्चासौ धृतभामश्च तम् इति चिन्तामणिपक्षे । हृदि निकामं कोमलमित्यनेन व्यतिरेकः । मणिस्तु अन्तः-कठिन एव । शिवस्तु अन्तःकोमलः । तादृशं शिवचिन्तामणिं वन्दे ॥ ९८ ॥

**निर्व्याधि मे शरीरं निराधि चेतः सदा समाधिपरम् ।**
**कुरु शर्व सर्वदा त्वं नान्यं कामं वृणे काञ्चित् ॥ ९९ ॥**

**निर्व्याधीति** । हे शर्व ! मे शरीरं निर्व्याधि; चेतस्सदा निराधि समाधि-परं च सर्वदा त्वं कुरु; नान्यं कञ्चित् कामं वृणे । यदि वपुररोगं मनश्च आर्तिहीनं त्वत्समाधिमग्नं च भवेत्, को वास्ति परः प्रार्थनीयः कामः ? यथाह श्रीनीलकण्ठदीक्षितः शान्तिविलासे—

भव्ये देहे पटुषु करणेष्वालये श्रीसमृद्धे
कौमारान्ते वयसि कथमप्यप्रवृत्ते च दुःखे ।
प्रत्यक्पुष्पीप्रसवविधया यस्य पुंसो निसर्गात्
प्रत्यग्वक्त्रं भवति हृदयं कस्ततोऽप्यस्ति धन्यः ॥

निर्व्याधीत्यस्य स्थाने क्वचित्कोशे '**कुरु बहु शास्त्राभ्यासम्**' इति श्लोकः दृश्यते । कुरु बहुशास्त्राभ्यासम्; योगाभ्यासांश्च साधय; तेन शास्त्र-योगाभ्यासेन अहं सुलभः इति हे शिव त्वं वदसि किमित्युत्प्रेक्ष्य प्रत्याह—नायमात्मेत्यादि । 'नायमात्मा प्रवचनेन लभ्यः न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा वृणुते तनूं स्वाम् ॥' इत्यादि श्रुत्युदितं वचनजातं शृण्वन् जनः अत्र शास्त्रादौ कथं मनः कुर्यात् । श्रुतिषु यथा त्वयैवोद्घोषितं तथा त्वमेव मां वृणुष्व ॥ ९९ ॥

**आर्यापतेः पदाब्जे निहितं शतपद्मपत्रमयपुष्पम् ।**
**आर्याशतं सुकृतिनां हृदयामोदं सदा वहतु ॥ १०० ॥**

स्तुतिग्रन्थमुपसंहरति कविः **आर्यापतेरिति** । आर्यापतेः पार्वतीपतेः पदाब्जे निहितं शतपद्मपत्रमयपुष्पं शतं पद्यान्येव पत्राणि तन्मयं पुष्पं कमलं तद्रूपं आर्याशतं आर्याणां शतं सुकृतिनां हृदयामोदं सदा वहतु ॥ १०० ॥

अप्पय्यस्य ग्रन्थः शिवभक्तिः मित्रकार्यसंपत्तिः ।
अत्रान्वेतुं वृत्त्या पर्याप्ता किं न हेतुसामग्री ॥
यत्सव्यदक्षिणार्धप्रकटीकृतशब्दभावसाहित्यम् ।
तेजस्तदर्धनारीमयमनया प्रीयतां वृत्त्या ॥

॥ इति भरद्वाजकुलतिलकश्रीमदप्पय्यदीक्षितविरचितशैवार्याशतकस्य श्रीराघवशर्मणा कृता वृत्तिः संपूर्णा[६९] ॥

। आर्याशतकं समाप्तम् ।

---

६९. The colophon in M: श्रीमदपय्यदीक्षितविरचितार्याशतकं संपूर्ण ॥ श्रीसांबसदाशिवार्पणमस्तु ॥ कलंकी शीतांशुः कुटिलहृदया सापि तटिनी पशुर्नंदी सोयं कठिणहृदया शैलतनया । निषेधादन्येषां सततसमवेते दयितया कृतां वा मद्भक्ति भव भवति विज्ञापयति कः ॥ ॥ ॥

अपय्यादीक्षितकृतशतक पत्रें ६.

The colophon in R: इति श्रीमद्भरद्वाजकुलतीलकश्रीमदंपया-दीक्षितविरचितं शैवार्याशतकं समाप्तं ॥ श्रीरस्तु ॥ शुभं भवतु ॥

The colophon in P: इति श्रीमद्दापय्यादीक्षितविरचितशिवार्याशतकं समाप्तं ॥ ॥ छ ॥ श्रीसांबार्पणमस्तु शके १७२४ चैत्र वद्य १२ गुरुवासरे इदं पुस्तकं समाप्तं ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

# अकारादि–वर्णानुक्रमेण श्लोकसूची

# Select Opinions and Reviews

## A BIBLIOGRAPHY OF THE RĀMĀYAṆA

By N. A. Gore, M.A.

Published by the author. Poona, 1942.

Price Re. 1-8-0

—1—

This excellent booklet by Professor Gore of the S. P. College, Poona, is sure to receive an enthusiastic welcome from all serious students of the Rāmāyaṇa.... The material for this Bibliography has been carefully prepared and methodically presented. Different editions of the Rāmāyaṇa, both critical and uncritical, are first described. This is followed by a description of its translations into English and other European and Indian languages. A few important abridgments and epitomes in English, Sanskrit or other languages are mentioned next; and finally all important books of general criticism of the poem as well as articles of a similar nature appearing in the various magazines and periodicals are given. The matter under each head is alphabetically arranged and in many places appreciative or informative remarks are added in rectangular brackets under the different entries. The remarks are a sufficient indication to show that the author was not working in a purely mechanical manner....

Journal of the University of Bombay, September 1943. — H. D. Velankar.

—2—

Mr. N. A. Gore has compiled a meritorious reference work in his *Bibliography of the Ramayana*. It is planned on an extensive scale, and gives carefully-prepared lists of books on all aspects and subjects connected with the *Ramayana*, in all languages—eastern and western. It also gives excellent educative notes, culled from various sources, which betray the extensive learning of the author. An appendix brings together many extracts from standard works relating to subjects relevant to the *Ramayana*. Altogether, *A Bibliography of Ramayana*, reflects credit on the knowledge and scholarship of the author, and it should find a place in every library not only in India, but wherever Indian literature and culture are studied and appreciated. It must have cost the compiler much time and labour, and we hope it will find a large market, which it fully deserves by reason of its out-standing merits, and great utility to the students of the *Ramayana*.

June 1943. HINDUSTAN REVIEW, Patna.

—3—

This small work is an interesting and useful contribution to Epic Studies... it is conceived in the proper spirit and makes the right beginning towards the compilation of bibliographical material, which the growing vastness and extremely specialised character of every branch of oriental study necessitates. The work gives a compilation of most of the noteworthy publications on the Rāmāyaṇa, including in its scope Text-editions, Translations, Adaptations, and Critical and Literary Notices or Studies in journals or separate publications. In some cases the compiler adds short notes on the general content or substance of important works or articles.

The Indian Historical Quarterly, Vol. XIX, 1943. DR. S. K. DE.

—4—

This is a small book............in which the young author has collected together a wealth of information about the great Epic.... He gives information about the text editions, translations, abridgments and epitomes; then he gives the bibliography for criticism.

...Then there is a long appendix in which he gives extracts from authoritative writers on various interesting points connected with the Rāmāyaṇa, like epic language, poetic art and inter-relation of Rāmāyaṇa and Mahābhārata. In the second appendix he gives a few points for study and with a subject-index and abbreviations, the book ends.

The Adyar Library Bulletin. DR. C. KUNHAN RAJA.

—5—

Professor Gore's *Bibliography of the Rāmāyaṇa*, the pioneer attempt in the field of Sanskrit literature, will answer a long-felt want.

The book is divided into nine sections, the first five of which deal with Bibliography proper covering 366 entries in all. Then follow "Extracts" from standard authors on topics connected with the *Rāmāyaṇa*, useful chiefly to students, "Points for study of the *Rāmāyaṇa*," a "Subjects Index" and "Abbreviations."

Summaries and lists of contents have been incorporated in the case of important books and articles. The author has tried to make the book as comprehensive as possible, and deserves to be congratulated on the admirable and satisfactory manner in which he has executed his work.

We strongly recommended the book to every Oriental scholar....

The Indian P. E. N.
1 July, 1943. DR. A. D. PUSALKAR.

—6—

........I have carefully peeped through it with much benefit. You have brought so much useful and relevant information that it has become an indispensable companion to students of the Rāmāyaṇa.

Kolhapur, 11 April, 43. DR. A. N. UPADHYE.

---

**The Ṛjulaghvī or The Mālatīmādhava Kathā**

Of Pūrṇasarasvatī, critically edited for the First Time with an Introduction, Indexes and Notes by Prof. N. A. Gore, M.A. with a Foreword by Dr. V. Raghavan, M.A., Ph.D.

—1—

Prof. Gore's painstaking work on the present edition is, I believe, a direct testimony of his being a *Samānadharmā* to both the poet and his poet, commentator Pūrṇasarasvatī. Love in its widest sense makes life worth-*living* and worth-*loving*. It exercises a potent humanizing influence on the roughest mortals in this world owing to its inward appeal. This epitome of Bhavabhūti's love-drama will, therefore, be read with delight by the Sanskrit-knowing public on account of its skilful presentation of the *Mālatīmādhava Kathā* by the author. I fully endorse Dr. Raghavan's recommendation in his Foreword with regard to this work when he remarks : " The *Ṛjulaghvī* will surely be profitable to students who study the *Mālatīmādhava* for examinations and as a Khaṇḍa-Kāvya it can also be independently prescribed for study in the Intermediate Classes of our Colleges."

I congratulate Prof. Gore, the editor of the Poona Orientalist on his scholarly critical edition of the *Ṛjulaghvī* published by him for the first time on the strength of manuscript material unknown to Aufrecht's *Catalogous Catalogorum*.

Indian Antiquary, February, 1944. P. K. GODE.

—2—

...The *Ṛjulaghvī* is a poetic version of the story of *Mālatīmādhava* of Bhavabhūti and, as the name indicates, it is both straight ( ṛju ) and brief ( laghu ) in the narration of the rather intricate plot of the play....The work under review is a metrical representation of the story of the *Mālatīmādhava*.

While the author is very faithful in narrating the story of the *Mālatīmādhava*, it must be said that he is **quite original and refreshing**. The verses are very simple ; sometimes there are very beautiful descriptions. There is a variety of metres used in the narration. The work has its own literary value, apart from its importance as an introduction for the study of the drama....

In bringing out the edition, the Professor has taken considerable pains to reconstruct a readable text ; and considering the fact that he had to depend on a single manuscript, and that only a recent transcript and not the original, **he has done his work exceedingly well.** The introduction gives a full account of the text, and one gets a clear idea of the text from this introduction. In the foot-notes the editor gives the reading founds in his original and also explains the reasons that led him to adopt a particular emendation. Comparing the reading as found in the original used with the text as it is printed after reconstruction, one can understand that the editor had a very difficult task before him. The text is followed by an alphabetical index of verses in which the metre is also noted after the passage, an index of the metres used in the text with the number of verses in the particular metres and also an alphabetical list of verses taken in this narration from the *Mālatīmādhava*. The notes that follow give meanings of rare words that need explanation and grammatical points and other guides that help a reader

in understanding the text, along with a few corrections in the printing of the text.

The edition is a model of accurate preparation of the text for the press after careful examination of the matter available; there are very few printing mistakes. The printing and get up are very good, just what we have been accustomed to in this series.

The Adyar Library, Bulletin. } DR. C. KUNHAN RAJA.

---

Copies of the books can be had of

**1. The author, 12, Vishnu Sadan, 327, Sadashiv, Poona 2**

**2. The Oriental Book Agency, Poona.**

## By the Same Editor

1. **The Pauma-cariya** ( ch. 33-35 ) of Vimala Sūrī. In collaboration with Prof. R. D. Laddu, M A., 1942 Re. 1-8-0.

2. **A Bibliography of the Rāmāyaṇa** with 14 extracts very useful for the study of Rāmāyaṇa, 1943. Re. 1-8-0

3. **The Ṛjulaghvī** or the **Mālatīmādhava-Kathā** of Pūrṇasarasvatī. Published for the first time with an Introduction, Notes and Indexes. With a Foreword by Dr. V. Raghavan, M.A., Ph.D. Poona Oriental Series No. 83. 1943. Rs. 2-0-0.

4. **The Svapnavāsavadattam** of Bhāsa with an Introduction, a complete translation into English, Appendices and a Bibliography. In Collobaration with Prof. Dr. M. A. Mehendale, M.A., Ph.D., 194? Rs. ?-4-0.

---

### By Dr. V. Raghavan

1. **Bhoja's Śṛṅgāra Prakāśa**, Karnatak Publishing House, Bombay, 1940.
2. **The Number of Rasas**, The Adyar Library, Adyar, 1940.
3. **Some Concepts of Alaṅkāra Śāstra**, The Adyar Library, Adyar, S. I. 1942.